योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM
Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 262 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 17 जुलाई 2021 शनिवार | पृष्ठ-4 | मूल्य- 2 रुपये

### सुभाषितम्

विद्या मित्रं प्रवासेषु,भार्या मित्रं गृहेषु च।
व्याधितस्यौषधं मित्रं, धमी मित्रं मृतस्य च॥

अर्थ – विदेश में ज्ञान, घर में अच्छे स्वभाव और गुणस्वरूप पत्नी, औषध रोगी का तथा धर्म मृतक का सबसे बड़ा मित्र होता है।

### संक्षिप्तवार्ताः

**ब्रह्मपुरम् ।** लांजिपल्ली श्रीकृष्णमन्दिरात् विंशति सहस्राणि रूप्यकानि चौर्यानि ।

**पाराद्वीपम्।** पाराद्वीप पि पि एल मुख्यद्वारं निकषा पण्यवाहि रेलयानस्य चत्वारः शकटाः मार्गच्युताः ।

**आठगडम्।** गोपबन्धु विज्ञान महाविद्यालयस्य 59 तम प्रतिष्ठा दिवसः कोबिड नियमानुसारं परिपालितः ।

**भुवनेश्वरम्।** राज्ये अहोरात्रमध्ये 64 कोबिड आक्रान्ताः मृताः ।

### 2070 नवीनाक्रान्ताश्च चिह्निताः

ओडिशाराज्ये पञ्चायत निर्वाचनाय प्रक्रियारम्भो जातः । राज्यस्य मुख्यनिर्वाचन अधिकारी जिल्लापालेभ्यः मतदात?नां नाम-तालिकां याचितवान् । माध्यमिक शिक्षा परिषदि पुनः अफलाइन मेट्रिक-परीक्षादातुं 2244 संख्यकाः असन्तुष्टाः परिक्षार्थिनः नामांकनमकुर्वन् ।

**कटकम् ।** देवगडजिल्ला रिआमाल पञ्चायत समिति अध्यक्षा गीताञ्जलि हाती-विरोधेन अनास्थाप्रस्थावः आगतः। अस्मिन् विषये उच्चतम न्यायालये निष्पत्तिर्भविष्यति ।



**बुर्ला ।** राज्य प्रदुषण नियम उलघन हेतोः आम्बसढा कण्टापालिस्थित भोजनालयः होटेल मुन् वद्धतालेन अवरुद्धः प्रदुषण वोड कर्तुपक्षेन। **नन्दप्रदीप्तकुमारः**

भारतस्य विकासस्य रेलयानमधुना द्वयोः मार्गयोः चलन् निरन्तरमग्रे उद्गमिष्यति

## प्रधानमन्त्रिमोदिना गांधीनगरस्य 'रेलवे स्टेशन' इति स्थलस्य समुद्घाटनं कृतम्



**नवदेहली।** देशस्य यशस्वी प्रधानमन्त्री मोदी महाभागः 'विडियो कॉन्फ्रेंसिंग' इति माध्यमेन गुजरात प्रदेशे काश्चिश्च विकास-परियोजनैः सह गांधीनगरस्य नवनिर्मितमाधुनिकम् 'गांधीनगर कैपिटल स्टेशन' इति रेलवेस्थलस्य समुद्घाटनं तथैव 'साइन्स सिटी' इति स्थाने 'एक्वेटिक एण्ड रोबोटिक्स गैलरी नेचरपार्क' इति विभागस्य शुभारम्भं कृतवान्।

अस्मिन्नवसरे प्रधानमन्त्री महोदयः उक्तवान् अद्य गुजरातप्रदेशस्य 'रेल कनेक्टिविटी' इति व्यवस्था सशक्ता जाता। अपि च तेन कथितम्, यत् भारतस्य विकासस्य रेलयानमधुना द्वयोः मागर्योः चलन् निरन्तरमग्रे उद्गमिष्यति। एको मार्ग आधुनिको भविष्यति तथापरमार्गः निर्धनकृषकाणां मध्यमवर्गजनानां कृते भविष्यति।





## कर्कटरोग- चिकित्सालय- निर्माणार्थं भित्तिप्रस्तर- स्थापनम्

**उडीशा/ नन्दप्रदीप्तकुमारः** रथयात्रायाः शुभावसरे ओडिशाराज्य मुख्यमन्त्रिणा मान्यवर नवीन पट्टनायकेन भुवनेश्वरस्थित इनफोभाली नामके स्थाने द्वयोः अत्याधुनिक कर्कटरोग चिकित्सालययोः निर्माणाय भित्तिप्रस्तरं संस्थापितम्। एकस्तावत् वागची शंकर कर्कट चिकित्सालयः अपरश्च वागची करुणाश्रय पलिएटिभ् केयार सेण्टर । ओडिशा दक्षताविकाश प्राधिकरणाध्यक्षः सुब्रत वागची तथा तस्य पत्नी सुस्मिता वागची पक्षतः एतदर्थं अनुदान स्वरूपं 340 कोटि परिमिताः अर्थराशयः प्रदत्ताः । 750 शय्या-परिमितेऽस्मिन् चिकित्सालये दीनरोगिणां कृते निःशुल्क सेवा भविष्यतीति मुख्यमन्त्रिणा संसूचितम् ।

## केरलेषु कोयिलाण्टिदेशे रेल्यानस्योपरि केरवृक्षः पतितः

**नवदेहली।** कोयिलाण्टिदेशसमीपं रेल्यानस्योपरि केरवृक्षः पतितः। सायंकाले पादोनषट्वादने एव घटना एषा संवृत्ता। कोयिलाण्टि-तिक्कोटिदेशयोः मध्ये एव अपघातः जातः। अनन्तपुर्याः मंगलापुरं प्रति गच्छतः नेत्रावती एक्स्प्रस् नाम रेल्यानस्योपरि एव केरवृक्षः पतितः।

## एष्यायां भारतम् अतिक्रम्य कोविडस्य तापबिन्दुः भूत्वा इन्डोनेष्या

### प्रतिदिनं 40,000 अधिकजनाः रोग बाधिताः

**नवदेहली।** इन्डोनेष्याराष्ट्रे कोविड् रोगिणां प्रतिदिनसंख्या वर्धते। इतःपर्यन्तं 40,000 उपरि एव प्रति दिनरोगिणां संख्या। नूतनतया दृढीकृतेषु बहुषु अतिव्यापनक्षमः डेल्टा विभेदः एव अधिकतया दृश्यते। इत्थं इन्डोनेष्या प्रतिदिनरोगिणां वर्धितसंख्यया भारतम् अतिक्रम्य एष्याभूखण्डे कोविडस्य तापबिन्दुः (प्दू ज्दू) अभवत। गतसप्ताहादारभ्य भारते प्रातिदिन-कोविड्रोगिणां संख्या 40,000तः न्यूना एव। द्वितीयतरङ्गे अतिरूक्षे अनुवर्तिते प्रतिदिनं चर्तुलक्षाधिकरोगिणः भारते आसन। जून् मासस्य अन्तिमचरणे रोगिणां संख्या न्यूना अभवत। इन्डोनेष्यायां रोगव्यापनमानं वर्धमाने सन्दर्भेऽस्मिन् राष्ट्रे सर्वत्र नियन्त्रणानि अतिशक्तानि अकुर्वन।



## दक्षिणाफ्रिक्काराष्ट्रे भारतीयान् प्रति आक्रमणम्, भारतेन आशङ्क्र आवेदिता

**नवदेहली।** दक्षिणाफ्रिक्कादेशे भारतीयान् तथा भारतीयवंशजान् प्रति जायमानेषु आक्रमणेषु भारतसर्वकारेण आशङ्क्र आवेदिता। दक्षिणाफ्रिक्कायाः विदेशकार्य-मन्त्रिणा नलेदि पान्डोरेण सह भारतीयविदेशकार्यमन्त्री डो. जयशङ्करः आशयविनिमयः कृतः।दक्षिणाफ्रिक्कायाः पूर्वराष्ट्रपतिः जेक्कब् सुमा कारागृहे बन्धितः अभवत्। अस्मिन् सन्दर्भे एव तस्य अनुयायिनः आक्रमणम् आरभत। सर्वकारेण शान्तिं पुनस्थापयितुं परिश्रमः आरब्धः इति



दक्षिणाफ्रिक्काराष्ट्रस्य विदेशकार्यमन्त्रिणा उक्तम् इति जयशङ्क्रः अवदत्। न्यायालयालक्ष्यम् इति दोषं कृतवान् इत्यतः एव तस्मै पञ्चदशमासपर्यन्तं कारागारे बन्धनम् अलभत्।

## सम्पादकीयम्

# विपत्तिरपि शिक्षयति

विपत्तयोऽस्माकं जीवनं त्रस्तं कर्तुं नागच्छन्ति, अपितु वयं भविष्ये किं कुर्याम? जीवनं कथं जीवेम? तथा काः त्रुटयो जाताः? तासां कथं सुधारमथवा समाधानं कुर्याम? येन भावीजीवनपथकथं सुखप्रदं सुरक्षितञ्च भवेतिति बोधयितुं समागच्छन्तीति मे मतिः।

विपत्तियाँ हमारे जीवन को अस्त-व्यस्त करने नहीं आती हैं, अपितु हमें भविष्य में क्या करना है? कैसा जीवन जीना है ? तथा क्या त्रुटियाँ हुई हैं ? उनका कैसे सुधार या समाधान करना है? जिससे भावी जीवन पथ सुरक्षित और सुखमय हो, यह समझाने आती हैं, ऐसा मेरा विचार है।

# स्वामिकरपात्र महाराजस्य प्रेरक जीवन चरित्रम्



करौ हि यस्य पात्रं सः करपात्रः इति । वस्तुतः एतादृशानां धनकनकविषयासक्त्यादिभिः रहितानां महाजनानां परिचयः तु अयमेव पर्याप्तः, न वा तेषां जन्मस्थानादीनां विस्तृत-विवरणम्, तेषान्तु जीवनादर्शः हि वास्तविकतया तादृशानां स्वकीयः परिचयः भवति ।

स्वामिकरपात्रमहाराजः कश्चन अर्वाचीनः महान् साधकः अभवद् अस्यां भारतपुण्यभूमौ । तस्य दिनचर्या विलक्षणा, यां च भक्तगणः अपि न जानाति स्म । रात्रौ प्रायः एकवादने निद्रातः जागरणं प्राप्य, उत्थाय तत्कालं हि स्नात्वा स्वजप-ध्यान-समाध्यादिकार्यार्थम् उपविशति स्म । प्रातः त्रिवादनसमये शौचादिकृत्यतः निवृत्तिं प्राप्य पुनः स्नात्वा पञ्चवादनपर्यन्तम् एकाकी एव भ्रमणकार्ये प्रवृत्तः भवति स्म । तद्भ्रमणकालेऽपि आगमोक्तस्तोत्रपाठः जपश्च प्राचलत् स्वामिनः नियततया । प्रातः 5 तः 8 वादनपर्यन्तं अर्चनपूजादिक्रियां सम्पादयति स्म । न केवलं स्वाश्रमे एव अपितु यात्रायामपि एनं कार्यक्रमं पूर्णतः निरवहत्।

स्वामिनः मध्यान्हकालिकी पूजा 12 वादनसमये, सायञ्जलिकी पूजा च 7:30 तः 9:30 वादनपर्यन्तं प्रातिदिनं प्रचलति स्म । अपराह्णकालिकी रात्रिकालिकी च पूजा भक्तानां मध्ये हि प्राचलत् महाराजस्य ।

महाभागस्य पूजने श्रीयन्त्रम्, शालग्रामशिला, एकादशनर्मदेश्वरः एवं बाणलिङ्गम्, पारदलिङ्गम् इत्यादिकं विविधं लिङ्गं भवति स्म । एतदतिरिच्य सायञ्जलिकपूजायाम् एकादशपार्थिवेश्वरस्य प्रतिदिनं निर्माणं कृत्वा महोदयेन अपूज्यत, एवञ्च षडंगरुद्राभिषेकमपि तत्कालिकपूजायाः अङ्गमासीत् ; पूजानन्तरञ्च तीव्रशङ्खध्वनिः क्रियते स्म । तद्ध्वनिं विश्रुत्य पार्श्वीयाः साधारणजनाः पूजाप्रसादं ग्रहीतुं तत्र आगच्छन्ति स्म, महाराजः स्वहस्तेन तेभ्यः प्रसादं व्यतरत् सर्वदा ।

योगासनं महाराजस्य सततं कर्तव्यमासीत, त्रिहोरात्मककालं यावत् निरविच्छिन्नतया शीर्षासने अविचलततया स्थितः भवति स्म ।

चतुर्विंशतिहोराकाले सूर्यास्तपूर्वम् एकवारमात्रं भिक्षया प्राप्तं दुग्धादिकं भुङ्क्ते स्म । शैत्यम्, औष्ण्यम्, वृष्टिः इत्यादिषु सर्वेषु अवस्थादिष्वपि सः एकमात्रं सामान्यं गात्राच्छादनवस्त्रं व्यावहरत् , केनापि श्रद्धालुना कम्बलादिकम् उष्णवस्त्रं दीयते चेदपि सः निराकरोत् सर्वदा । एवम् अत्यन्तं त्यागमयं जीवनमासीत् महोदयस्य ।

एतादृशस्य त्यागिपुरुषस्य जीवनचरित्रविषयः यावदपि विस्तार्यते, तत्स्वल्पं हि भवति ; अतः अलं विस्तरेण इति, शम् ।

**नारदोपाध्यायः**

## ॥ जय जय जय देवि त्वं सदा भूतले वै॥

भवति ननु शिवो वै शक्तियुक्तो यदा हि
प्रभवसकलकार्ये कारणे यस्समर्थः ।
हरिहरसुकवीनां देवि च त्वं सुवन्द्या
प्रभवति सुजनस्त्वां च प्रणन्तुं कथं वै ॥1॥

तव च चरणधूलिं मस्तके धारयन्स
परमनिपुणविज्ञो ब्रह्मदेवो हि सृष्टिं ।
विरचयति कृपादृष्टेस्ते हि मातः ! भवानि
जय जय जय देवि त्वं सदा भूतले वै ॥2॥

अखिलजगदिदं तत् पालयन् देवविष्णुः
हरति सकलमेतद्विश्वलोकं शिवो हि ।
तव चरणरजस्ते योगिनो लेपयन्ति
जय जय जय देवि त्वं सदा भूतले वै ॥3॥

तिमिरनगरनाशं त्वं च शीघ्रं करोषि
तव च चरणरेणुर्भासते सूर्य एव ।
स्तबककुसुमसारे चेतनारूपिका त्वं
जय जय जय देवि त्वं सदा भूतले वै ॥4॥

हरसि सकलपापं त्वं जडानां सदा हि
अथ रणरणकं त्वं हारिणी निर्धनानाम् ।
स्मरणकरणमात्रेणैव देवी दयार्द्रा
जय जय जय देवि त्वं सदा भूतले वै ॥5॥

उदधिपतितलोकांस्तारयन्ती सदा त्वं
धरसि विविधरूपं त्वं वराहस्य दंष्ट्रा ।
तव शुभचरणौ तौ क्षालयन्तश्च देवा
जय जय जय देवि त्वं सदा भूतले वै ॥6॥

विपुलवरदहस्ता ब्राह्मणानां कृते वै
सुफलमपि च दातुं सर्वदा भक्तहेतोः ।
स्फटिकसुसितमाला राजते ते च कण्ठे
जय जय जय देवि त्वं सदा भूतले वै ॥7॥

अभयवरदमुद्रा ते करस्यैव भाति
नखयुतचरणौ ते कामनाः पूरयन्तौ ।
अभिलषितवरा त्वं देवि मातः शरण्ये
जय जय जय देवि त्वं सदा भूतले वै ॥8॥

जपसुकृततपोभिस्त्वां हरिः पूजयन्स
स्मररिपुमपि नारी क्षोभयन्ती पुरा वै ।
युवतिरतिपतिस्त्वां नौति पादाब्जरेणुम् ।
जय जय जय देवि त्वं सदा भूतले वै ॥9॥

प्रणतवरजनेभ्यस्त्वं सुखं च प्रदात्री
हिमगिरितनया त्वं भाति मे सर्वदा हि ।
सुललितवदने त्वां नौति वै या शिवानी
जय जय जय देवि त्वं सदा भूतले वै ॥10॥

**( मालिनी छन्दः )**

**डा. शिवानी शर्मा, जयन्तीपुरम्, हरियाणाराज्यम्**

ब्रह्मन्नध्ययनस्य नैष समयस्तूर्णीं बहिः स्थीयतां
स्वल्पं जल्प बृहस्पते जडमते नैषा सभा वज्रिणः।
वीणां संहर नारद स्तुतिकथालापैरलं तुम्बुरो
सीता रल्लकभल्लभग्नहृदयः स्वस्थो न लङ्केश्वरः॥

**-रसगङ्गाधरः**

# पुरी रथ विश्लेषणम् - श्रीक्षेत्रे रथयात्रा विश्वप्रसिद्धा, बहु पुरातनी रथसंस्कृतिः

श्रीक्षेत्रे रथयात्रा विश्वप्रसिद्धा । बहु पुरातनी रथसंस्कृतिः । अस्माकं भारतवर्षे वैदिककालादारभ्य रथनिर्माणस्य परंपरा वर्तते । पुर्य्यां त्रिषु रथेषु 2188 काष्ठखण्डानि व्यवह्रियन्ते । तेषु फाशी.धउरा.असन.शाल्मली.देवदारु.पालधुआ.कअंस.महानिम्ब.वृक्षाणां प्रमुखभूमिका वर्तते । इमे वृक्षाः नयागड.दशपल्ला वनविभागेन प्रदीयन्ते । वैशाख.शुक्ल.तृतीया अथवा अक्षयतृतीया.दिवसात् प्रतिवर्षं नवीन.रथनिर्माणस्य शुभारम्भो जायते । शिल्पशास्त्र.मानसार.अपराजितपृच्छा.शुल्वसूत्र.मयमत.विशकर्मप्रकाश. शिल्पसारसंग्रहादिषु ग्रन्थेषु रथनिर्माणस्य वर्णनं लभ्यते । शिल्पशास्त्रानुसारं नन्दिघोषादिरथानां निर्माणं भवति । देवी चर्च्चिका रथनिर्माणस्य इष्टदेवी । श्रीनहर ;राजगृहस्यद्ध सम्मुखे इयं देवी विराजमाना । तत्र रथखलां ;रथनिर्माणस्थानम्द्ध निर्माय रथनिर्माणकार्यं जायते । रथनिर्माणे ये जनाः नियुक्ता भवन्ति तेषु विश्वकर्म;वर्धकीद्ध.कर्मकार.रूपकार.चित्रकार.सूचीकार.भोइसेवकाः प्रमुखाः । ते निर्मातारः पारंपरिक.हस्त.अगुलि.मानेन रथनिर्माणं कुर्वन्ति ।



**1.नन्दिघोषः** नन्दिघोषः श्रीजगन्नाथस्य स्यन्दनम् । अस्य नन्दिघोषस्य गरुडध्वज.चक्रध्वज. कपिध्वजभेदेन नामानि प्रसिद्धानि। अयं रथः इन्द्रप्रदत्तः । रथरत्नं स्पटिकम् । विश्वकर्मी अस्य निर्माता । 33 हस्त 5अंगुल त्र44फुट 3 इञ्च उच्च.परिमिते अस्मिन् रथे 832 संख्यकानि काष्ठानि व्यवह्रियन्ते । अस्य षोडशसिद्धि.परिमितानि 16 चक्राणिए16 अराश्च भवन्ति । प्रतिचक्रस्य व्यासः 7 फिट् । दैर्घ्य.प्रस्थौ 35 फुट् । रथपीठस्य क्षेत्रफलः 1225 फुट् । भूमेः दधिनउति.उच्चता 24 फुट् । पीतलोहितो रथावरणः । हिरण्यगर्भः दधिनउतिः । तत्र जीव.परमौ शुकपक्षियुगलौ । दारुकः रथ.सारथिः । चत्वारो घोटकाः शंख.श्वेत.बलाहक.हरिदश्वाः शुभ्राः । रथरज्जुः शंखचूडः। नभ.व्योम.आकाशानि त्रयः कलशाः । कलशोपरि शून्यचक्रस्य नाम सुदर्शनम् । पताका त्रैलोक्य मोहिनी । ध्वजचिह्नं हनुमान् । शंख.चक्रे रथायुधे । षोडशदलाकृतिः भद्रपीठः । चन्द्रातपनाम कनकमुण्डी । सम्मुखद्वारस्य चित्रं कल्पवृक्षस्य द्वे पत्रे । उत्सवमूर्त्ती वासुदेव.मदनमोहनौ । जय.विजयौ द्वारपालौ । कुमुद.कुमुदाक्षौ प्रातिहारौ। रथरक्षकौ इन्द्र.गरुडौ । भैरव.नरसिंह.गरुड.वासुदेवाः रथपालाः । रथाधिपो वैनतेयः । रथदेवता नृसिंहः । शीर्षदेवता कल्याणसुन्दरः । चरदेवौ वराह.नृसिंहौ । सम्मुख पार्श्वदेवताः ब्रह्मेन्द्र.सप्तषर्यः । पृष्ठभागदेवताः नृसिंह.राम.नारायणाः । वामभागदेवताः त्रिविक्रम.हनुमत.रुद्राः । दक्षिणे वराह.कृष्ण.गोपीनाथाः । रथदेवी योगमाया । रथभैरव एकपात् । रथशक्ती विमला दृविरजे । रथयक्षः हर्याक्षः । रथगन्धर्वः वैधृतिः । रथ.सम्मुखे फुलमोची उर्वशीए पृष्ठे कनकमञ्जरी काममञ्जरीए वामे प्रेममञ्जरी चम्पकमञ्जरीए दक्षिणे अनंगमञ्जरी भ्रमरमञ्जरी चेमाः सर्वाः रथासीना अप्सरसस्तथा नारद.देवल.व्यास.शुक.पराशर.वशिष्ठ.विश्वामित्र.रुद्राः ऋषयश्च नन्दिघोषे विलसन्ति ।

**2.तालध्वजः.** तालध्वजरथस्य नायकः देवाधिदेवो बलदेवः । अस्य लांगलध्वज इति नामान्तरमस्ति । रथरत्नं मर्कतम् । मयदानवः अस्य निर्माता । 32 हस्त 10अंगुल अथवा 39 फुट् 4 इञ्च उच्चमान.विशिष्टेऽस्मिन् रथे 763 काष्ठखण्डानि व्यवह्रियन्ते । चतुर्दशभुवनसंज्ञकानि अस्य 14 चक्राणिए14 अराश्च सन्ति । चक्रव्यासः 6 फुट् । रथपीठो मेरुकैलाश.संज्ञकः 34 फुट् दैर्घ्य.प्रस्थविशिष्टः अष्टदलपद्माकारश्च । क्षेत्रफलः 1156 फुट् । रथावरणः नीललोहितः । दधिनउतेर्नाम भुवनकोषः । अस्मिन् सुपण.द्वीसुपर्णौ शुकपक्षियुगलौ । चन्द्र.सूय.विद्युतः कलशत्रयः । कलशोपरि शून्यचक्रं कालसंहारः । पताका ऊन्मनी । ध्वजे तालचिह्नम् । रथरक्षकाः वासुदेव.भास्कर.रुद्राः । हल.मुसलौ रथायुधे । तीव्र.घोर.दीर्घश्रम.स्वर्णनाभाः चत्वारो घोटकाः कृष्णवर्णाः । रथरज्जुर्वासुकिः । ब्रह्म.शिवौ रथशक्ती । चन्द्रातपः कनकमेखलः । सम्मुखद्वारचित्रं पञ्चपत्रविशिष्टं तालपत्रम् । राम.कृष्ण.गोपालाः उत्सवमूर्त्त्यः । सुशील.अतिशीलौ प्रतिहारौ । रथपालः आदिशेषः । रथाधिपः बृहन्यासः । शीर्षदेवता अनन्तनागः । चरदेवौ ब्रह्म.शिवौ गणेश. कार्त्तिकेय. मृत्युञ्जय. सर्वमंगला. प्रलम्बारि. हलायुध. नाटाम्बर. मुक्तेश्वर.शेषदेवाः नवपार्श्वदेवताः । रथदेवी केतुभद्रा । भैरवः क्षेत्रपालः । रथशक्ती जयदुर्गा शूलिनी दुर्गा च । रथयक्षः प्रचण्डः । जया. विजया.चण्डी.चण्डरूपा. नन्दा.आनन्दा.सनन्दा.तिलोत्तमाः अष्टौ अप्सरसः । अंगिरा.पुलह.पुलस्त.कृष्ण.मुद्गल.आत्रेय.काश्यप.आसष्टयः अष्टौ ऋषयः तालध्वजे निवसन्ति ।

**3.देवदलनः** देवदलनस्य नायिका देवी सुभद्रा । अस्य रथस्य दर्पदलन इति नामान्तरमस्ति । रथरत्नं माणिक्यम् । कालनेमी अस्य निर्माता । 31 हस्त वा37 फुट् 6 इञ्च अस्य उच्चता । 593 काष्ठखण्डानि अस्मिन् रथे व्यवहृतानि । अस्य राशिस्वरूपाणि 12 चक्राणिए 12 अराश्च सन्ति । चक्रव्यासः 5 फुट् । रथपीठः काम्पिल्यः 33 फुट् दैर्घ्य.प्रस्थविशिष्टः सहस्रदलपद्माकारः । क्षेत्रफलः 1089 फुट् । रथावरणः कृष्णलोहितः । हिरण्मयी दधिनउतिः । अत्र श्रुति.स्मृती शुकपक्षियुगलौ । परा.अपरा.वैखर्यः त्रयःकलशाः । दीप्तनामा शून्यचक्रम् । नादाम्बिका वैजयन्ती। शुभ्रपद्मं ध्वजसंकेतः । रथायुधौ पद्म.कल्हारौ । वीरघण्टः चन्द्रातपः । सम्मुखद्वारे पञ्चलताकार.चित्रम्। रथाधिश्वरौ सुभद्रा.सुदर्शनौ । उत्सवमूर्तिः जयदुर्गा । गंगा.यमुने द्वारपाले । सारथिः अर्जुनः । रोचिका.मोचिका.जिता.अपराजिताः चतस्र अश्वाः रक्तवर्णाः । स्वर्णचूडः रथरज्जुः । विमला. दुर्गा. वाराही. चामुण्डा. भुवनेश्वरी. हरचण्डी.जयदुर्गा.सर्वमंगला.उग्रतारा: नव.पार्श्वदेव्यः रथस्य । भृगु.सुप्रभ.वज्र.शृंगि.ध्रुवाः रथ.ऋषयः । मनोरमा.तिलोत्तमे प्रतिहारे । रथरक्षके उग्रचण्डा.चन्द्रघण्टे । रथपालो हरिहरः । रथाधिपा वनदुर्गा । रथदेवता महामंगला । रथदेवी चन्द्रघण्टा । भैरवो घण्टाकर्णः । यक्षः किंज्वल्किकः । गन्धर्वः हा हा । एताः देवताः देवदलने विराजन्तेतराम् । अलं पल्लवितेन । जय जगन्नाथ ।

**डः नन्दप्रदीप्तकुमारः**

# सर्वासामाञ्चलिक भाषाणामस्ति स्वीयं वैशिष्ट्यम्

**....भृकुटी कमानन अचूकनैनबानन को हीय कामबानन को बनतनिसानो है।**

सर्वासामाञ्चलिकभाषाणामस्ति स्वीयं वैशिष्ट्यम्। नैजं माधुर्यं, स्वीया नैसर्गिकता, प्रवाहात्मकता लयबद्धता च। ब्रजभाषा यत्र लालित्य विकिरति तत्रैव राजस्थानीभाषा ओजगुणं प्रतनोति। ब्रजराजस्थानीभाषयोरनुवादे दृश्यते डिंगलपिंगलयोश्छटा। यत्र ब्रजभाषायै लालित्यप्रदाने अनुप्रासालङ्कारस्य योगदानम् तत्र राजस्थानी भाषानुवादे मूर्धन्याक्षरविच्छित्तिः गढ़वाली भोजपुरी भाषानुवादाः मूलवत् मन्दाक्रान्ताछन्दसैवोपनिबद्धाः सन्ति। छत्तीसगढ़ी– भोजपुरी भाषानुवादेऽन्त्यानुप्रासः। निदर्शनमेवैतत्। अत्र सङ्कलिताः पद्यानुवादाः संस्कृतभाषया सह स्वीयमन्तः सम्बन्धं प्रतिष्ठापयितुं तथैव सचेष्टाः दृश्यन्ते यथाऽभिनेतविशिष्टः विविधवेशोपवेशमङ्गीकृत्य रङ्गशालायां प्रविशति दृग्गोचरीभवति च। अत्रानेकत्वेऽप्यस्ति यदेकत्वं तदेवास्माकं गौरवम्, सा एवास्माकं भारतीयता याऽऽत्मस्वरूपायामस्यां संस्कृतभाषायामाञ्चलिकभाषायां च निहिताऽस्ति। वस्तुतः आञ्चलिकभाषासु समुपबृंहितः पद्यानुवादः स्वकीयेन वैशिष्ट्येन लोके न केवलं मेघदूतसन्देशप्रेषणव्याजेन भारतराष्ट्रदर्शनं कारयति अपितु कविकुलगुरोरपि राष्ट्रस्यैक्यभावं संस्कृतभाषायाः सर्वासां भाषाणां मातृभावां भारतीयजनमानसे द्रढ़यति।

**भाषानुवादकानां सम्मतयः**

गढ़वालीभाषानुवादकः धर्मानन्दाचार्यः मेघदूतस्य अनुवादविषये हार्दमित्थं व्याहरति-संस्कृत सरीखी व्यञ्जना-प्रगल्भ और सीमित शब्दों माँ भी विपुल भावबोधिका भाषा की, महाकवि कालिदाससरीखा समर्थ कवि की मेघदूतजनी भावपूर्ण कृति जो गढ़वाली जनी अपुष्टभाषा मां निर्धारित छन्द बन्धन का अन्तर्गत अनुवाद करणू कितना कठिन कार्य छ येको अनुमान विज्ञजन ही करी सकदा।

**बुन्देली भाषानुवादकः सत्यार्थी पण्डित गुणसागरस्तु कालिदासस्याधमर्ण्यमित्थमावहति-**

नवजात शिशु सदैव अपने बड़े-बूढ़ों की उंगली पकड़ कर ही तो चलना सीखता है, तो क्यों न बन्देली को भी कालिदास से समर्थ बड़े-बूढ़ों की उंगली थमा दी जाये। बस इसी विचार ने मुझे काालिदास के बुन्देली पद्यानुवाद हेतु प्रेरित किया।

**राजस्थानीभाषानुवादं समीक्षन्तो श्री कोलमकोठारिणः**

इस अनुवाद का सफल श्रेय श्री नारायण सिंह जी को तो है ही किन्तु उसके साथ ही उस महान् भाषा को भी है जिसमें ये कोमलतम भाव विकसित हो सके, अभिव्यञ्जित हो सके पूरी सबलता और सप्राण जीवनसहित। उदाहरणतः 'रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां'6 इत्यस्य राजस्थानी रूपान्तरम् - **रेवानद रळकीज पड़ी है विन्ध्य पठाराँ। जाणे रेख वभूत कुरीजी गै सिणगारा॥**

**अत्रत्य 'रळकीज' शब्दविषये पुनः सः**

अनाज को सूप में हिलाने को रळकना कहते हैं। सूप के हिलाने और उससे धान के इधर-उधर बिखर जाने में जो स्वतः प्रवाह है, वहीं रेवानदी के रळकने में सौन्दर्य उत्पन्न करता है।

एतत्सव समीक्ष्य निश्चयेन शक्यते वक्तुं यत् इमाः आञ्जलिकभाषाः संस्कृतभाषया समं स्वीयमन्तः सम्बन्धं प्रकटयन्ति। तत्सम्बन्धः कस्यांश्चित् भाषायां साक्षात् अनुभूयते कस्याश्चिच्च परोक्षरूपेण। यथा ह्याचार्याः डॉ. रामकरणशर्माणः -''संस्कृतमस्य देशस्य केन्द्रिया व्यापिका सनातनी सांस्कृतिकी भाषाऽस्ति। अस्माकं परम्परायामस्याः भाषायाः अन्याभिः सर्वाभिः भारतीयभाषाभिः घनिष्ठः सम्बन्धः वर्तते। भाषाविज्ञानसम्बन्धिनी वार्ता क्षमं तावद् पूरे आस्ताम् तथापि विश्वस्य प्रायशः समधिकभाषाभिः समं संस्कृतस्यान्तरिकः सौहार्दमयः सम्बन्धः नैव परिहरणीयः।'' प्रो. राधावल्लभ त्रिपाठिमते श्रीमद्भगवद्गीता मेघदूतञ्च इत्येतयोः ग्रन्थयोः पूर्वकालत इदानीं यावत् यथा टीकानुवादग्रन्थाश्च सन्ति रचिता दृश्यन्ते न तथा संस्कृतस्यान्यकृतेः। मेघदूते भावगम्भीर्यम् अनुभूतिः संवेदनायाः चिरनवीना अक्षय्या स्रोतस्विनी अन्तर्हिता वर्तते या अनुवादकान् टीकाकारांश्च व्याख्या-पुनर्व्याख्या आविष्कार पुनराविष्कारधिया आमन्त्रयति....। वस्तुतः एते सर्वेऽप्यनुवादाः सुषमां प्रसारयन्तोऽपि मूलकृतेरनन्यतामननुवाद्यतां च बोधयन्ति। मेघदूतस्य मेघदूतादप्यधिक सुन्दरोनुवादः साहित्यजगतः स्वप्न एव तथा च तस्य सौन्दर्यम् आञ्चलिकभाषासु प्रकटीकरणं एका दूरारूढ़ा आकाङ्क्षा।

# आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद् विभुः अनिरूद्धेच्छाप्रसरः प्रसरदृक् क्रियः शिवः

काश्मीरशिवाद्वयवादे सर्जनप्रक्रियायाः एका व्यवस्था अस्ति। परमशिवस्योपरि कर्त्रन्तरता नास्ति तथा पृथिव्यनन्तरं कार्यान्तरोत्पत्तिरपि नास्ति। सम्पूर्णसृष्ट्यां तत्त्वानि पारम्पर्यभावेन परस्परसंश्लिष्टानि भवन्ति। शैवागमे स्वतन्त्रा चितिरेव विश्वसिद्धेः कारणं इति मन्यते। अतः स्वतन्त्रा चितिरेव सृष्टि-स्थिति-लयानां हेतुः वर्तते। इमां प्रक्रियां चितिशक्तिः स्वेच्छापूर्वकमेव सम्पादयति। अन्तःस्थवस्तूनां प्रकटीकरणमेव उन्मीलनं भवति। इत्यनेन जगतः प्रकाशैकात्म्येन अवस्थानं भवति। काश्मीरशिवाद्वयवादानुसारं षटत्रिंशत्तत्त्वानि प्रकाशस्वभावेन प्रकाशितानि सन्ति। महार्थमञ्जरीकारेण महेश्वरानन्दानुसारेण पृथिवीतत्त्वतः शक्तिपर्यन्तम् इदं विश्वस्फुरणम् इच्छा-ज्ञान-क्रियाशक्तिसमुच्चयस्य चमत्कारः अस्ति। यद्यपि विश्वस्य रचना परमात्मनि अन्तर्भूतैवास्ति तथापि दर्पणवत् स्वभित्तमाधारीकृत्य शिवः स्वयमेव विश्वं बहिराभासयति। ''स्वशक्तिप्रचयोऽस्यविश्वम्'' इदं सूत्रमपि प्रमाणमस्ति यत् शिवस्य सर्वशक्तिमत्तायामेवेदमशेषं विमर्शात्मकं विश्वं जगद्रूपकार्यम् अनुप्राणितं भवति।

आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद् विभुः।
अनिरूद्धेच्छाप्रसरः प्रसरदृक् क्रियः शिवः॥

परमात्माजीवात्माजगत्विषयकचिन्तनस्य विधा ''दर्शनशास्त्रम्'' इति अस्ति। दार्शनिकविचाराणां परम्परा अनादिकालात् प्रवाहमानास्ति। काश्मीरशैवदर्शनानुसारं परमशिवः शुद्धप्रकाशरूपः। अयं प्रकाशः सूर्यस्य अथवा मणेः सदृशं जडं नास्ति अपितु चैतन्यस्वरूपमस्ति। मयूराण्डरसन्यायानुसारम् इयं सृष्टिः महेश्वरे अभिन्नरूपेण विद्यमानास्ति। समुद्रे तरङ्गसदृशं चेतनायामपि आभासः उद्भवति। आभासस्य पुनर्पुनरुन्मीलनं निमीलनं च भवति, परन्तु तस्य अधिष्ठातरि चेतनायाम् कोऽपि परिवर्तनं न संजायते। आभासः महेश्वरस्य कल्पनायाः बहिःप्रक्षेपमात्र एवास्ति। अत्र सृष्टिप्रकियाहेतुः कस्यापि बहिरुपादानस्य आवश्यकता नास्ति। प्रस्तुतशोधपत्रं जागतिकवैचित्र्याणां तार्किक-विश्लेषणं प्रस्तौति। विभिन्नदर्शनेषु सृष्टेः पृथक्-पृथक् व्याख्या परिदृश्यते परन्तु काश्मीरशैवदर्शने तात्त्विकसृष्टेः तार्किकरूपेण विश्लेषणं तथा च तत्त्वानां पूर्वापरक्रमस्य एका नूतना व्याख्या दृश्यते या अन्यैः दर्शनैः अस्य वैशिष्ट्यं प्रतिपादयति एवञ्च विदुषां दृष्टिः आकर्षयति। प्रमुखाः शब्दाः - शैवदर्शनम्, जीवात्मा, परमात्मा, तर्कः, प्रकाशः। काश्मीरशैवदर्शने परमशिव एकमात्र अद्वैततत्त्वम् इति मन्यते।

# महाप्रबन्धक महोदयस्य नेतृत्वे 'ओलम्पिक' इति क्रीडा प्रतिस्पर्धायां प्रतिभागिनः सुनिश्चिताः

**प्रयागराजः।** आगमिनि 23 जुलाईमासः 2021 तः 'टोक्यो ओलम्पकि' इति क्रीडास्पर्धार्थं भारत सर्वकारस्य 'युवा कल्याण खेल' इति मन्त्रालयः 'ओलम्पिक' इति विश्वस्तरीय क्रीडायां प्रतिभागितार्थं क्रीडकानां समुत्साहवर्धनाय राष्ट व्यापिनमभियानं प्राचलिस्यति। एतत्क्रमे रेलवे परिषद् द्वारा पारित निर्देशस्यानुरूपं 'केन्द्रिय विद्युत रेल' इति संगठनस्य विभागस्य सर्वेऽधिकारिणः महाप्रबन्धक महोदयस्य नेतृत्वे अद्यास्मिन्नभियाने प्रयागराजे सम्मिलिता जाताः। महाप्रबन्धक महोदयेन कथितम्, भारतीय रेल विभागः सदैव क्रीडाक्षेत्रे स्वप्रमुखां भूमिकां सुनिश्चितं करोतीति सर्वविदितोऽस्ति। अस्मात्कारणादेव भारतीयरेलविभागस्य केचिद्वा-रिष्ठक्रीडकाः 2020 ईस्वीसने जापनदेशे टोक्यो नगर्याम् 'ओलम्पिक' इति क्रीडाप्रतिस्पर्धायां स्वप्रतिभागितां सुनिश्चितां करिष्यन्ति। महाप्रबन्धक महोदय उक्तवान्, अस्माकं विभागस्य सर्वे क्रीडकाः तत्र सुन्दरं प्रदर्शनं कृत्वा देशस्य सम्मानं सम्वर्धनं करिष्यन्तीति मे विश्वासो वर्तते।

# आसनस्य अपरं नाम वर्तते व्यायामः

प्राचीनग्रन्थानां सम्पुटेनात्र अयं विषयः आधुनिकपरिप्रेक्ष्याय महत्त्वम् आवहति अनेन एव विषयेण किमपि नूतनं साधयितुं शक्यते एव तद्द्वारा कथं शक्यते इति विवेचनं क्रियते। स्थिरसुखमासनम् इति तु पातञ्जलयोगसूत्रे स्पष्टं लिखितम्। सुखयति इति सुखं तादृशं सत् स्थिरं यत् तथा च सुखप्रदत्वे सति शरीरवृत्तिस्थिरत्वम् आसनत्वम्। सुखपूर्वकं शरीरस्य लाभाय यत्क्रियते तदासनमिति। योगासनैः शरीरस्य नियन्त्रणं जायते। योगस्य क्रियाः एव योगासनानि उच्यन्ते। सौविध्येन एकस्मिन् आसने उपवेशनस्य नाम आसनमस्ति। आसनस्य शाब्दिकार्थः उपवेशनम्, उपवेशनाधारः, उपवेशनस्य विशेषक्रिया च उच्यते। सक्रिययोगासनानां नामापि आसनमुच्यते योगव्यायामोऽस्ति। आसनानि प्राकृतिकस्वरूपं प्रापयन्ति। पातञ्जलियोगदर्शने आसनस्य स्थानं तृतीयमस्ति किन्तु गोरक्षनाथादिभिः प्रवर्तिते षडङ्गयोगे प्रथमस्थानमस्ति। चित्तस्य स्थिरतायै शारीरिकदृढतायै कायिकसुखाय वा अस्याः क्रियायाः विधानमस्ति। यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयः इति अष्टाङ्गयोगः। यमाः - अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-अपरिग्रहाः। नियमाः - शौच-सन्तोष-तपः स्वाध्याय-ईश्वर-प्रणिधानम्। अग्रे वर्धनं भवति अष्टाङ्गयोगस्य तत्र तृतीयस्थानीयानि भवन्ति चतुरशीतिः आसनानि शरीरस्य नियन्त्रणं भवति आसनेन। सौविध्येन एकस्मिन् आसने उपवेशनं नाम आसनम्। उपवेशनं उपवेशनाधारः उपवेशनस्य विशेषक्रियापि आसनम्। आसनस्य अपरं नाम वर्तते व्यायामः इति। अत्र आसनानि च अनेन क्रमेण - सप्तसाधनानामभ्यासबलेन मानवः स्वीयं सर्वविधं जीवनतत्त्वं साधयितुं शक्नोति तच्च घेरण्डसंहितायां वर्णितमस्ति - आसनस्य प्रक्रिया

आसनानि भोजनात् पूर्वं परं सर्वकालेषु च कर्तुं शक्यानि सन्ति किन्तु विभिन्नानाम् आसनानां विधानमस्ति यत् किमासनं कस्मिन् काले प्रकर्तव्यम् वज्रासनम् कदापि कर्तुं शक्नुमः, शवासनमपि किन्तु भारयुतानि आसनानि प्रातःकाले एव करणीयानि भवन्ति कथनस्याभिप्रायः अस्ति यत् यावत्पर्यन्तम् आसनानि उचितरीत्या न करिष्यन्ते तावत्पर्यन्तं पूर्णोत्तमरीत्या समाजो वैशिष्ट्यं प्राप्तुं न शक्नोति मानसिकसन्तापं विहाय आसनानि पूर्णोत्तमरीत्या प्रकर्तव्यानि तद्द्वारा एव शरीरस्य मनसः बुद्ध्याः वा सन्तापो गमिष्यतीति।

आसनस्य महत्त्वम्- सततम् आसनानां करणेन अनेकविधसमस्यानां समाधानं जायते प्रत्येकं व्यक्तिः यत्र रोगरहिता भवति तत्रैव तस्याः सामर्थ्यवर्धनमपि भवति।

तच्च यथा - आसनस्य प्रकाराः - विभिन्नानि योगासनानि हठयोगे विभिन्नयोगासनानि वर्ण्यन्ते। यथा - वज्रासनं, पद्मासनं, भुजङ्गासनं, मयूरासनं, शलभासनं, मत्स्यासनं, कूर्मासनं, वीरासनं हनुमदासनं, सिंहासनं, ताडासनं, हलासं वृक्षासनं, वृश्चिकासनम् इत्यादयः।

आसनेभ्यः पूर्वं व्यायामानाम् आवश्यकता प्रतीयते। व्यायाममाध्यमेन शरीरे ऊष्णता स्फूर्तिः च आगच्छतः।

व्यायामस्य भागद्वयं भवति -

यौगिक सूक्ष्मव्यायामाः - यथा-
बुद्धिशक्तिधृतिशक्तिविकासकक्रिया,
ग्रीवाशक्तिविकासकक्रिया, नेत्रशक्तिविकासकक्रिया,
पादांगुलिशक्तिविकासकक्रिया,
वक्षःस्थलशक्तिविकासकक्रिया, उदरशक्ति विकासकक्रिया
इत्यादयः।

# प्राणायामस्त्रिधा प्रोक्तो रेचकपूरककुम्भकः सहितः केवलश्चेति कुम्भको द्विविधो मतः

पञ्चविंशति मुद्राणि सिद्धदानीह योगिनाम्।। अन्याः संक्षोभणी-द्रावणी-आकर्षणी-वशी-उन्माद-महांकुशमुद्राणाञ्चापि निर्देशास्तु प्राप्यन्ते। क्वचित्तु खेचरी-भूचरी-अगोचरी-चाचरी-उन्मनीत्यादि नाम्नाऽपि मुद्राणां कथनं प्राप्यते। एतासां सर्वासां मुद्राणां न्यूनाधिक्यरूपेण हठयोगप्रदीपिकायां वर्णितमुद्रास्वन्तर्भावं प्रदर्शयामि। यतोहि सर्वेषु क्रियारूपेषु प्रयोगकाले केन्द्रपरिवर्तनादेव विभिन्नरूपेषु मुद्रायाः स्वरूपाण्यनुभूयन्ते।सम्पूर्णोद्देश्यप्राप्तिस्सामर्थ्यमस्त्येव, उक्तञ्च- इदं हि मुद्रादशकं मुद्राणामुत्तमोत्तममिति।6 अन्यासां मुद्राणां कथनन्तु विभिन्नमार्ग-निदर्शन-मात्रमिति। शरीरस्थविभिन्नप्राणानां निश्चितचक्रेण सह विशिष्टसम्बन्धः, यथा तु मूलाधारेणापानस्येत्यादि।

तथैव प्राणायामेन चक्राणां संशोधनं भवति। यथा प्राणचक्राणां परस्परं सम्बन्धः तथैव मुद्राप्युभयेन सह सम्बध्यते, यतोहि मुद्राणां प्रादुर्भावः आसनप्राणायामयोर्मध्ये तथा च बहिरङ्गप्रत्याहारधारणाद्यऽन्तरङ्गयोर्मध्ये व्यवस्थासम्पादनाय भवति। प्रथमचरणे आसन प्राणायामयोर्मध्ये मुद्राणां प्रयोगः साधकप्रयासेन सम्भवति यथा तु घेरण्डसंहितायां आसनानन्तरं एतासां वर्णनं वर्तते। एतासामभावे स्थिरता लाभो नैव सम्भवम्। परञ्चाग्रिमस्तरे एतासां मुद्राणामाविर्भावो भवति। सहजतायाः महत्त्वं प्रदर्शनाय हठयोगप्रदीपिकायां मुद्राणां वर्णनं प्राणायामानन्तरं प्राप्यते। प्रयोगकाले प्राणायामस्य केवलकुम्भकावस्थायां चित्तव्यापाराभावाद् प्रत्याहारस्यान्तर्भावो ज्ञेयः। हठयोगप्रदीपिकायां त्रिविधप्राणायामस्य एवं द्विविधकुम्भकस्य वर्णनं प्राप्यते।







# 'ऋणत्रयमपाकृत्य मनः मोक्षे निवेशयेत्'

'ऋणत्रयमपाकृत्य मनः मोक्षे निवेशयेत्' इत्यभ्युक्त्यनुसारेण जन्ममात्रं सर्वोऽपि मानवः त्रीभिः ऋणैः ग्रस्तो भवति। ऋषिऋणम् इति प्रथमम्, देवऋणम् इति द्वितीयम्, पितृऋणमिति तृतीयम्। आदौ अर्थात् ब्रह्मचर्यावस्थायाम् अध्ययनादिद्वारा ऋषिऋणात् मुक्तयेऽवसरो भवति। ततः धर्मानुष्ठानेन देवऋणात्, श्राद्धाद्यनुष्ठानेन च पितृऋणान्मुक्तिः भवति। अतः सर्वऋणपरिशोधात्परं मानवः मुक्तये अधिकृतो भवति। भारतीया या ज्ञानपरम्परा सा मनीषीभिः युगे युगे सम्बर्धिता सुरक्षिता च अस्ति। तस्याः विशेषविज्ञानभूतायाः विद्यायाः परिरक्षणं क्रमः अर्वाचीनाचार्यैः अनुवर्तितः। अतः तदा तदा अनेके आचार्याः आर्षविद्यामुद्दिश्य समाजस्य हिताय विविधान् ग्रन्थान् विरच्य स्वप्रज्ञाप्रकर्षम् आविष्कृतवन्तः। एतस्मिन् क्रमे दक्षिणराज्योद्भवः श्रीनाथमुनिः सर्वलोककल्याणकरं योगरहस्याख्यं ग्रन्थं विरच्य सर्वेषां नो चेतः आकर्षितवान्। योगरहस्यग्रन्थोऽयं योगदर्शनसम्बद्धः। पतञ्जलिप्रणीतयोगदर्शनाविरोधेन विरचितोऽयं ग्रन्थः बाह्य-आभ्यन्तरविज्ञानबोधकः अत्यन्तमुपादेयो वर्तते। अस्मिन् योगदर्शनस्य शास्त्रीयस्वरूपेण सह आधुनिकवैज्ञानिकपक्षस्य अर्थात् व्यावहारिकस्वरूपस्य साधुवर्णनं कृतं वर्तते। योगरहस्यग्रन्थस्य कर्ता श्रीनाथमुनिः इति। असौ आचार्यः वैष्णवशिरोमणिः आसीत्। मुनिरयं 824 तमे वर्षे चिदम्बरसमीपस्थे वीरनारायणपुरमिति ग्रामे जन्म अलभत। पिता ईश्वरभट्टः आसीत्। तस्य पुत्रः ईश्वरमुनिः असौ अल्वारसम्प्रदाये प्रसिद्धस्य नालयिरदिव्यप्रबन्धस्य भाष्यमरचयत्। श्रीनाथमुनिः एकदा केषांचित् यात्रिकाणां मुखात् श्रीनाम्मल्वार्भिः विरचितान् प्रबन्धान् श्रुतवान्। तेषां प्रबन्धानां माधुर्यं गम्भीरतां च अवगत्य प्रबन्धानां कर्ता कः इति यात्रिकान् अपृच्छत्। एते प्रबन्धाः श्रीनम्माल्वार्प्रणीता इति यात्रिकाः अवदन्। पुनश्च श्रीनम्माल्वार्प्रणीतेषु 4000 प्रबन्धेषु दशसंख्यकान् प्रबन्धान् वयं जानीमः इति ते यात्रिकाः अवोचन्। श्रीनाथमुनिः यात्रिकाणां सकाशात् एतत्सर्वं श्रुत्वा श्री नम्माल्वारमुनीमहत्त्वं च अवगम्य शिष्टानां प्रबन्धानां श्रुश्रूषया श्रीआल्वारतिरुनगरीं प्रति यात्रां कृतवान्। तत्र श्रीमथुरकवीनां शिष्यान् अमिलत् श्रीनाथमुनिः। मथुराकवेः शिष्यः श्री पराङ्कुशदासः स्वगुरुणा विरचितान् प्रबन्धान् प्रबोध्य भगवतः उपासनां कर्तुम् उपदिष्टवान्। ततः श्रीनम्माल्वागुरोः सकाशादधिगतविद्यः श्रीनाथमुनिः स्व अष्टौशिष्यान् अबोधयत्। अल्वारसम्प्रदाये प्रथितेषु वैष्णवाचार्यप्रवरेषु श्रीनाथमुनिः प्रथमाचार्यः आसीत्। सर्वेऽपि आल्वारभक्ताः मिलित्वा श्रीनालयिरदिव्यप्रबन्धे समग्रं वैष्णवसम्प्रदायं निरूपितवन्तः। श्रीनाथमुनिः यद्यपि तमिलभाषायाम् अनेकान् ग्रन्थान् अरचयत् तथापि संस्कृतभाषया तेन ग्रन्थाः लिखिताः ते च संस्कृतसाहित्ये प्रसिद्धिं गताः। श्रीनाथमुनिप्रणीताः सर्वेऽपि ग्रन्थाः प्रायः कालकवलिताः ध्वस्ताः च अभवन्। तेषु योगरहस्यग्रन्थः अन्यतमः आसीत्। श्रीनाथमुनिः योगरहस्यग्रन्थं शिष्ययोः श्रीमन्नक्कलनम्बिः, कुरूकैक्का वलपन् इत्यनयोः कृते, पौत्रस्य यामुनस्य च कृते अपाठयत्। ततः कालगर्भे लीनः श्रीनाथमुनिः अग्रे तस्य ग्रन्थस्य प्रचारं कर्तुं न समर्थ अभवत्। कालचक्रस्य क्रमे उनविंशतितमे शताब्दौ श्री टी कृष्णमाचार्यः इति योगीपुंगवः श्रीनाथमुनेः साक्षादनुग्रहेण जन्म अलभत। श्रीकृष्णमाचार्यः विविधविद्यासु विचक्षणः दर्शनादिशास्त्रेषु निष्णातः योगदर्शनं प्रति आसक्तः अभवत्। बाल्ये वयसि स्वपितुः मुखात् श्रीनाथमुनीनां महिमाविषयं श्रुत्वा तस्मिन् मुनौदत्तादरः अभवत्। ततः परं श्रीनाथमुनेः पुरीं, आल्वारतिरुनगरीं दिदृक्षते स्म। प्राप्ते षोडशवर्षे श्रीकृष्णमाचार्यः तिरुनगरीं प्रति यात्राम् आरब्धवान्। तत्र तिरुनगरीं प्राप्य श्रीनाथमुनिः कुत्र तिष्ठति इति जिज्ञासां कृतवान्। तन्नगरस्थेन केनचित् वृद्धेन आम्रवृक्षमेकं प्रदर्श्य नाथमुनेः स्थानस्य सूचनां दत्तवान्। श्रीकृष्णमाचार्यः ताम्रपर्णीति नद्यां स्नानं कृत्वा यदा बहिरागतः तदा अकस्मात् चेतनारहितः भूमौ न्यपतत्। समाधिदशां प्राप्य आम्रवृक्षस्याधः शिष्यान् पाठयन्तं कश्चित् वृद्धम् अपश्यत्। श्रीकृष्णमाचार्यः तं प्रणम्य योगरहस्यं बोधयितुं प्रार्थितवान्। अङ्गीकृतनिवेदनः सः वृद्धः सपद्येव मधुरेण स्वरेण श्लोकान् समुच्चार्य बोधनमारभत। प्राप्तसञ्ज्ञः श्रीकृष्णमाचार्यः ताम्रपर्णीतीरे पतितं स्वात्मानं ज्ञातवान्। पुरतः आम्रवृक्ष एव दृष्टः मधुरस्वरेण श्लोकानां गानकर्ता तु कुत्रपि अन्तर्हितः अभवत्। परन्तु श्रीकृष्णमाचार्यः समाधौ श्रुतान् श्लोकान् यथावत् स्मृतवान्। नदीतटतः मन्दिरं गत्वा तत्रत्यवृद्धाय सर्वं वृत्तं न्यवदेयत्। स वृद्ध अवदत् तं, भवान् श्रीनाथमुनिना अनुगृहीतोऽस्तीति। श्रीनाथमुनिः स्वयं भवतः कृते योगरहस्यं पाठितवान्। भवान् स्नात्वा भगवतः विष्णोः दर्शनं करोतु गृहं गच्छतु इति वृद्धः उपदिष्टवान्। स्नानं भगवतः दर्शनं च समाप्य कृतज्ञतानिवेदनाय यदा तं वृद्धम् अन्विष्टवान् तदा सोऽपि वृद्धः अदृश्यः अभवत्। एवं काचित् कथा श्रूयते योग रहस्य कर्ता श्रीनाथमुनि विषये। अयं योगरहस्यग्रन्थः न परिपूर्णः इति श्री कृष्णमाचार्यः स्वयं सङ्कीर्तितवान्। इति एते प्रमुखग्रन्थाः आसन्। श्रीकृष्णमाचार्यः 1989 फरवरी 28 तमे दिनाङ्के इहलीलां त्यक्तवान्।

योगरहस्यग्रन्थस्वरूपम्

श्रीनाथमुनि विरचितं योगरहस्यं दर्शनप्रपञ्चे अत्यन्तं विलक्षणम्। दर्शनेषु प्रायेण तत्त्वानामुपरि प्राधान्यं परिलक्ष्यते परन्तु योगरहस्ये ग्रन्थे तत्त्वैः सह आधुनिकविज्ञानस्य यत् सकललोकहितकरं तदत्र विशेषेण प्रतिपादितं श्रीनाथमुनिना इति विशेषः। श्रीनाथमुनिः विशेषतः स्वकृतिषु विष्णुभक्तिं प्रतिपादितवान् अस्ति। योगरहस्ये प्राधान्येन हरिभक्तिं तद्द्वार मुक्तिं च प्रतिपादितवान् श्रीनाथमुनिः। जन्ममृत्योर्मध्ये विद्यमानस्य मानवजीवनस्य विषये श्रद्धां प्रदर्शयन असौ मुनिः सम्पूर्णे योगरहस्ये मानवस्य आरोग्यस्य सर्वविधसुखस्य च कथं प्राप्तिः स्यात् तत्सन्दर्भान् अपेक्षितान् सर्वान् अपि विषयान् साकल्येन न्यरूपयत्। भक्तिमार्गेण सह योगमार्गस्य अनुकरणोपरि बलं दत्तवान् श्रीनाथमुनिः। अत्र ग्रन्थे श्रीपतञ्जलिप्रोक्त अष्टांगयोगः कथितः। अष्टाङ्गयोगप्राप्तये पूर्वरङ्गोपायत्वेन षडङ्गोयोगः प्राधान्येन निरूपितः श्रीमुनिना इति। न केवलमेतत् तत्र ग्रन्थे अनेकव्याधीनां तन्निवारणोपायानां, स्त्रीणामारोग्याय अवश्यमनुष्ठेयानां रीतीनां, सुखमयजीवनाय कर्तव्यानाम् अभ्यासानां च सुष्ठु वर्णनम् अभिहितम्। अस्मिन् ग्रन्थे चत्वारोऽध्यायाः सन्ति। तत्र प्रथमाऽध्यायस्य नाम प्रकरणाध्यायः, द्वितीयाध्यायस्य नाम विनियोगाध्यायः, तृतीयाध्यायस्य नाम विमर्शनाध्यायः चतुर्थाध्यायस्य नाम कलाध्यायः इति। प्रकरणाध्याये 141 श्लोकाः सन्ति। अध्यायस्य आरम्भः अस्मत्परम्परानुसारेण मङ्गलाचरणद्वारा अभवत्। सर्वान् गुरुवरान् नारायणं च हृदि स्मृत्वा नाथमुनिः योगरहस्यम् अलिखत् इति। अस्मिन् ग्रन्थे प्राधान्येन भक्तिः प्रपत्तिश्च इति एतौ योगौ निरूपितौ। उभयोः फलं भुक्तिरूपम्, मुक्तिरूपं चेति निर्दिष्टम्। साधकः उभयफलोद्देश्येन योगाभ्यासं कुरुते इति महर्षिपतञ्जलेः वचनम्। योगः मुक्तेः साधनं यद्यपि तथापि विष्णुभक्ताः मुक्तये साक्षात् हरिं भजन्ते। अत्र प्रथमाध्याये भक्ति-प्रपत्तियोगविषये सङ्केतः कृतो वर्तते। एतदुभयविधस्य योगस्य सिद्धिः गुरोरनुग्रहेण भगवतः प्रसादेन च सम्भवति। प्रपत्तियोगः षडङ्गयुक्त अस्ति। तानि षडङ्गानि मुनिना एवं कथितानि -

1. आनुकूल्यस्य संकल्पः 2. प्रातिकूल्यस्य त्यागः 3. रक्षिष्यतीति विश्वासः,
4. गोप्तृत्ववरणम् 5. आत्मनिक्षेपः
6. कार्पण्यम्

अस्मिन् एव अध्याये क्रमशः अष्टाङ्गयोगानां तदधिकारिणां च चर्चा कृता। ततः प्राण-शरीर-इन्द्रिय-चित्त-बन्धः-मन्त्र- प्राणायामादिविषयेषु च विचाराः कृताः। द्वितीये विनियोगाध्याये आश्रमभेदेन अष्टाङ्ग योगस्य प्रयोगप्रक्रियाविषये च विचारः कृतः। तृतीये विमर्शनाध्याये भगवत्प्रसादप्राप्तये निष्कल्मषमनसा निर्विकारभावेन च ईश्वरैकभावनाभावितान्तःकरणेन योगाभ्यासार्थं साधकान् उद्दिश्य परामर्शः कृतो वर्तते। चतुर्थे कलाध्याये अत्र व्यवहारस्य व्यवह्यिमाणस्य आनुकूल्येन वस्तुज्ञानं सम्भवति तदर्थं योगिभिः साधकैः वा श्रद्धा प्रदर्शनीया इति चिन्तनं निरूपितम्। सकलशोकनाशपुरःसरं नित्यनिरतिशयसुखस्वरूपं कैवल्यं प्रतिपादितम्। तदङ्गतया योगाङ्गानि उद्दिष्टानि इति गौणरूपेण विचारितम्। मानवजीवनसौख्यप्राप्त्युपायाः सर्वात्मना ग्रन्थेऽस्मिन् श्रीनाथमुनिना विचारिताः। लौकिकजीवनस्य सुखद्वारा अलौकिकलक्ष्यप्राप्तिः इति विशेषेण उपदिष्टम्। सकलरोगनिवारणं तत्रपि क्षेत्रभूतानां स्त्रीणां रोगनिराकरणोपायाः विशिष्य विचारिताः सन्ति। शास्त्रीयतत्त्वानि भारतीय-आस्तिकदर्शनप्रस्थाने श्रीनाथमुनिविरचितः श्रीकृष्णमाचार्येण समुद्धृतः योगरहस्यं नाम ग्रन्थः नूनं इतरग्रन्थविलक्षणः। अस्मिन् ग्रन्थे भक्तियोगः आदौ निरूपितः, ततश्च प्रपत्तियोगः इत्येवं क्रमेण। तत्र निगदितं मुनिना भक्तियोगस्य प्रपत्तियोगस्य च सन्दर्भे -

अष्टाङ्गसहितो योगः भक्तियोगः प्रकीर्तितः।
षडङ्गसहितो योगः प्रपत्तिरितिभण्यते। ततः अग्रे गुरुदेवतयोः अनुग्रहं वर्णयता एवं कथ्यते।
गुरुप्रसादनादेव द्वौ योगौ फलदौ स्मृतौ।
अन्यथा पतनायालं निग्रहात् श्रीपतेः पदात्।

शेषावतारभूतेन पतञ्जलिना योगदर्शने यानि अष्टावङ्गानि प्रोक्तानि तेषां अष्टाङ्गयोगयुक्तानां यो योगः स एव अत्र भक्तियोगः इति ग्राह्यः। अनेन योगरहस्यग्रन्थस्य शास्त्रीयरूपं प्रमाणितं आविष्कृतं च भवति। भक्तियोगाय द्विजाः अधिकृताः, तत्र ये अधिकारिणः असमर्थाः द्विजेतराः तेषां कृते षडङ्गयुक्तः प्रपत्तियोगः निर्दिष्टः। एवं च परमपुरुषार्थप्राप्तये शास्त्रेषु अधिकारीभेदेन यः मार्गः उपदिष्टः तादृश एव मार्गः योगरहस्ये श्रीनाथमुनिना उपदिष्ट इति। शास्त्रेषु यत्प्रयोजनं कीर्तितं तदेव प्रयोजनमत्रपि सूचितम् इति शास्त्रीयं स्वरूपमस्य स्पष्टम्।

पुनश्च परिदृश्यमानस्य प्रपञ्चस्य कर्ता ईश्वरः ब्रह्म, परमात्मा वा इत्यादिभिः शब्दैः व्यपदिश्यते नाना शास्त्रेषु। योगरहस्यकारः श्रीनाथमुनिः अमुमेव शास्त्रसम्मतं - ''यतो वा इमानि भूतानि जायन्ते'' (तैत्तरीयोपनिषद् 3.1) इत्यादि श्रुतिसिद्धम् श्रीमन्नारायणं जगतः उत्पत्तिस्थितिलयकर्तृत्वेन, निमित्तोपादानकारणत्वेन च प्रतिपादयति। तद्यथा -
श्रीमन्नारायणो देवः सर्वेषां हृदि भासते।
उपादानं निमित्तं च जगतः सर्जने स्वराट्।
तस्माद्वाएतस्मादात्मनः आकाशसम्भूतः आकाशाद्वायुवायोरापरद्भ्य पृथिवी इत्यादि एषः श्रीमन्नारायणः सर्वज्ञः सर्ववित् च। एष एव परिदृश्यमानस्य अचिन्त्यरचनारूपस्य जगतः निमित्तम् उपादानञ्च। एष एव सर्वेषां हृदि स्थितः सन् सर्वप्राणिप्रेरकः सकल कल्याण गुणसमन्वितः। सर्वेषां प्राणिनाम् अङ्गानि प्रकाशयति। एवं भूतः योगशास्त्रसिद्धः ईश्वरः सर्वफलदाता इति साम्प्रदायिकैः अभ्युपगतम्। एतादृशोत्पत्तितत्त्वस्य ईश्वरस्वरूपस्य च यत् शास्त्रीयं रूपं तदस्मिन् स्फुटम् एव।

पुनश्च अत्र स्वस्थमानवेन सर्वाणि कर्माणि अनुष्ठेयानि इति भगवत्प्राप्तये यथाशक्ति कायेन मनसा वाचा च अनुष्ठानं करणीयम् इति यत् शास्त्रेषु वर्णितं तदेव अत्रपि इति। जीवनोपायकर्माणि भगवद्भजनानि च। अरोगदृढकायस्य सुलभानि भवन्ति हि। एतस्मिन् सन्दर्भे स्मर्यते महाकवेः वचनम् 'शरीरमाद्यं खलु धर्मसाधनम्।' अर्थात् धर्मार्थकाममोक्षाणां सिद्धये दृढं शरीरमपेक्षितम् इति। योगदर्शनोक्तं प्रणवोपासनमपि एतस्य शास्त्रीयं स्वरूपं द्योतयति।

# रामायणरचयितृरूपेण महर्षिर्वाल्मीकिः, महाभारतकाररूपेण महर्षिर्व्यासो वा

संस्कृतवाङ्मये महर्षिर्यास्को नैरुक्तरूपेण तथैव समाद्रियते यथाऽष्टाध्यायी-कृद्रूपेण महर्षिः पाणिनिः, रामायणरचयितृरूपेण महर्षिर्वाल्मीकिः, महाभारतकाररूपेण महर्षिर्व्यासो वा। महर्षिणा स्वकीये रचिते निरुक्ते वैदिकशब्दा व्याख्याताः। वैदिकमन्त्राणामर्थज्ञानेन सहैव क्लिष्टशब्दानां निर्वचनस्यापि ज्ञानं निरुक्तेन भवति इति तेनोक्तम्। महर्षिणा स्वीयां पद्धतिमाविष्कृत्य वैदिकशब्दाः समाख्याताः। शब्दा वैदिका वा लौकिका वा सर्वेऽपि भवन्ति धातुजा इति यास्कवचनम्। अतः सर्वे शब्दा अवश्यमेव निर्वचनीयाः। व्याकरणशास्त्रे स्वीकृते प्रकृतिप्रत्ययविभागे महर्षेराग्रहो न वर्तते। वैदिकशब्दानां निर्वचनप्रसङ्गे यास्कस्य मौलिकी प्रतिभा प्रेक्ष्यते। एषा प्रवृत्तिः सविशेषं तदा परिलक्ष्यते यदा वैदिकशब्दानां रूढिगतां व्याख्यामनाहृत्य तेषां निर्वचनं महर्षिरभिनवत्वेन प्रस्तौति।साक्षात्कृत धर्माणः ऋषयो बभुवुः। ते अवरेभ्यः असाक्षात्कृतधर्मभ्यः उपदेशेन मन्त्रान् सम्प्रादुः। उपदेशाय ग्लायन्तः अवरे बिल्मग्रहणाय इमं ग्रन्थं समाम्नासिषुः। वेदञ्च वेदाङ्गानि च।1 इति यास्कवचनात् ये पूर्व-ऋषयः तपोबलेन समाधौ परमात्मप्रदत्तवेदज्ञानस्य साक्षात्कारं कृतवन्तः ते साक्षात्कृतधर्माणः बभूवुः, ते अवरेभ्यः उत्तरेभ्यः तपोबलहीनेभ्यः इमं ग्रन्थं वेदं वेदाङ्गानि च रचितवन्तः, तथा च पुस्तकरूपेण प्रददुः। एतेन वेदेषु प्रयुक्तस्य एकैकस्य शब्दस्य निर्वचनद्वारा अर्थो निर्दिश्यते। त्रिधा च शब्दा भवन्ति प्रत्यक्षवृत्तिमन्तः परोक्षवृत्तिमन्तः अतिपरोक्षवृत्तिमन्तश्च। प्रत्यक्षवृत्तिमन्तः ते शब्दाः प्रकृतिप्रत्ययानां स्पष्टतया ज्ञानं भवति। येषाञ्च गन्धमात्रेण प्रकृतिप्रत्ययज्ञानं भवति ते परोक्षवृत्तिमन्तः, येषां च किञ्चिन्मात्रमपि न भवति । तेऽतिपरोक्षवृत्तिमन्त शब्दाः। तेषु प्रत्यक्षवृत्तिमताम् शब्दानाम् अर्थज्ञानं व्याकरणादेव सिद्धम्, परं परोक्षातिपरोक्षवृत्तिमतां शब्दानाम् अर्थज्ञानं निरुक्तेन कार्यते।

# दैवीवाक् रूपेण प्रथिताऽस्ति संस्कृतभाषा, जननी चापीयं मन्यते

दैवीवाक् रूपेण प्रथिताऽस्ति संस्कृतभाषा। जननी चापीयं मन्यते प्रायशः सर्वासां भारतीयभाषाणाम्। स्वयंपुष्टा अन्याः सर्वाः पोषयन्ती राराजते इयम्। पूर्वोत्तरभारते हिन्दी, बंगला, पञ्जाबी, मराठी, दक्षिणभारते च तमिल, तेलुगू, मलयालम प्रभृतयः बहव्यः भाषाः तत्रापि गढवाली, डोगरी, मेवाड़ी, ब्रज, छत्तीसगढ़ी, राजस्थानी, मैथिली, भोजपुरी, बुन्देली, कश्मीरी, मणिपुरी, सिन्धी, कोकड़ी, असमिया, उड़िया इत्यादयः लोकभाषात्वेन व्यवह्रियमाणाः सन्ति। प्रायशः एताः सर्वाः संस्कृतसूत्रे मणिगणा इव प्रोताः दृश्यन्ते। संस्कृतभाषायाः भारतीयभाषासु विपरिणतेरेका सुदीर्घा परम्परा वर्तते। 'स्वबहुसंख्यक सन्तानो- त्पादनानन्तरमप्येषा लैटिनभाषावन्नोपरता तथा चेदानीमपि विद्वांसः हिन्दी, बंगला प्रभृति भाषापेक्षया संस्कृतभाषालेखने निर्बाधं व्यापारयन्ति स्वकीयां लेखनीम्। संस्कृतभाषाया अद्यापि तादृश एव मानः यादृश एलेग्जेण्ड्रियास्थाने समजनि ग्रीकभाषायाः। संस्कृतभाषाया अद्यापि तादृशी एव प्रतिष्ठा यादृशी मध्ययुगे लैटिनभाषायाः समभवत्' इत्येवंरूपेण संस्कृतं प्रति स्वहार्दं प्रकटीकृतं पाश्चात्त्यविदुषा मैक्समूलरमहोदयेन। एतेन सुस्पष्टमिदं यत् संस्कृतस्य प्रतिष्ठा चिरन्तनी। कालिदासीयं मेघदूतमधिकृत्य तत्रत्यं त्रयोदशभारतीयभाषासु पद्यानुवादसङ्कलनं जोधपुरतः प्राकाश्यमागतम्। तत्र गढ़वाली, डोगरी, ब्रज, गुजराती, मेवाड़ी, छत्तीसगढ़ी, मराठी, मैथिली, नेपाली, राजस्थानी, भोजपुरी, बुन्देली, सदृश्यः भाषाः कथं संस्कृतेन समं स्वकीयमन्तः प्रकटयन्ति कथं च संस्कृत प्रति कार्तज्ञं प्रकाशयन्ति– इत्येवास्त्यत्रत्यः प्रतिपाद्यः। वस्तुतः महाकवेः कालिदासस्यामरकृतिषु श्रव्यकाव्यान्तर्गतं मेघदूतं देशे विदेशे च महतीं प्रतिथिं भजते। काव्यमिदं शापमूल कवि प्रलम्भशृङ्गारस्योत्कृष्टं निदर्शनम्। यद्यपि ध्वन्यालोककारः 'शृङ्गार एवं मधुरः परः प्रह्लादनो रसः' इत्युक्त्या प्रह्लादहेतुत्वात् रसान्तरापेक्षया शृङ्गारमेव मधुरं मनुते तथापि तट्टीकाकारोऽभिनवगुप्तः शृङ्गारस्यापरपक्षं विप्रलम्भं संयोगान्मधुरतरं स्वीकारोति। 'सम्भोगशृङ्गारान्मधुरतरो विप्रलम्भः'। प्राच्यविद्वद्भिरपि एतदेवाङ्गीकृतं यत् 'न बिना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते'। कालिदासस्यापि चेतः सम्भोगवर्णनापेक्षया विप्रलम्भवर्णने एवाधिकं रमते। भवत् नाम, मन्दाक्रान्ता छन्दसोपनिबद्धं ग्रन्थमेनमाधारी कृत्य सन्ति ग्रथिताः आञ्चलिकभाषानुवादाः। एवंविधाः अपि शब्दाः लोके उपलभ्यन्ते येषां प्रयोगः संस्कृतेन सममाधुनिकभारतीयभाषास्वपि भवति। उदाहरणतः– विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः संगीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम्। अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः प्रासादास्त्वां तुलयितुमल यत्र तैस्तैर्विशेषैः। अस्मिन् श्लोके व्यवस्थापितः विद्युत शब्दः गढवालीभाषायां, ललितवनिता गुजराती, इन्द्रचाप मराठी, सचित्र मैथिली, संगीत गढवाली, मुरज मैथिली, गम्भीर मेवाड़ी, अन्तस् बुन्देली, मणिमय छत्तीसगढ़ी, तुङ्ग हिन्दी, प्रसादशब्दाश्च गुजराती मराठी मैथिलीभाषायां तथैव प्रयुक्ताः सन्ति यथा द्विसहस्रवर्षपूर्वं रचितस्य मेघदूतस्य उपरितने चतुःषष्टितमे श्लोके सन्ति। एतेन आञ्चलिकभाषाभिः समं संस्कृतस्यान्तः सम्बन्धः सुस्पष्टः अस्ति। संस्कृतभाषायाः या अपरा विशेषता साऽस्ति तस्याः संश्लिष्टरूपता। अत्रास्ति नैपुण्यं समासविधेः। अनेकेषां पदानां संश्लेषणेनैकीकरणं समासस्य स्वीयं वैशिष्ट्यम्। आधुनिकभारतीयभाषाः सन्ति विश्लिष्टाः।

## रम्या रामायणी कथा

मर्यादा पुरुषोत्तम श्री राम की जीवन गाथा

**॥श्री राम कथा॥**

**नीलाम्बुजश्यामलकोमलाङ्गं सीतासमारोपितवामभागम्।**
**पाणौ महासायकचारूचापं**
**नमामि रामं रघुवंशनाथम?**

अहं नीलकमलाभायुक्तं मृदुश्यामवर्णाङ्गं वामभागे भगवतीसीताशोभायमानं हस्ते महाधनुषवाणधारकं ब्रह्माण्डनायकं रघुकुलभूषणं श्रीरामं श्रद्धाभक्तिपूर्वकं शिरसा वारम्वारं नमामि।

श्रीहनुमन्महाभाग अग्निं प्रज्वाल्य तत्सम्मुखे प्रतिज्ञापूर्वकं द्वयोः पक्षयोः कथां श्रावयित्वा तयो मध्ये मित्रधर्मस्य प्रतिष्ठां कृतवान्। श्रीरामः श्रीसुग्रीवो द्वौ हृदयेन प्रेमप्रतिष्ठामङ्गीकृत्य कश्चिदपि भेददृष्टिं न कृतवन्तौ। श्रीलक्ष्मणमहाभागेन प्रीतिपूर्वकं निर्मलभावेन श्रीरामचरित्रं विस्तीर्य सर्वं कथितम्। तत्सर्वं श्रुत्वा वानरराज सुग्रीव महाभागस्य नेत्रयोः प्रेमाश्रुसमुच्छलितो जातः। तेन कथितम्, हे नाथ! भगवती विदेहतनया शीघ्रमेव मेलिष्यतीति मे विश्वासो वर्तते। हे प्रभो! एकदा मन्त्रिभिः सह अत्रैव पर्वतशिखरे उपविश्य कस्मिंश्चिद्विषये विचारं कुर्वन्नासीत्। तदा मया दृष्टं यत्कश्चिद्दुष्टो व्योममार्गेण भगवतीं सीतां वशीभूतां कृत्वा विमानेन गच्छन्नासीत्। तदानीं सा बहुविलापं कुर्वन्त्यासीत्। हे भगवन्! तदानीमस्माकं दृष्ट्वा हे राम! हे राम! इति वारम्वारं उच्चैः वदन्ती स्व-वस्त्राणि अधोऽक्षिपन्। एतच्छ्रुत्वा श्रीरामेण कथितम्, हे वानरराज! कृपया शीघ्रमेव तानि वस्त्राणि मन्सम्मुखमानयत्विति निवेदये। यदा श्रीसुग्रीवमहाभागो भगवतीसीतायाः वस्त्राणि नीत्वा तस्मै प्रदत्तवान्, तदा तानि संदृश्य श्रीरामः प्रेम्णा सह स्वहृदयस्पर्शं कृत्वा बहुचिन्तनं कृतवान्। भगवत्प्रेमातिरेकमनुभूय वानरेन्द्रः सुग्रीवः श्रीरामं सादरं कथितवान्, हे रघुवीर! अलं चिन्तया, स्वमनसि धैर्यं धारयन्त्विति निवेदये। अहं सर्वप्रकारेण भवत्सेवां करिष्यामि। येन प्रकारेण भगवती जानकी समागत्य भवन्तं मिलतु, अधुना मनसा वाचा कर्मणा च तत्कार्यं कर्तव्यबोधपूर्वकं करिष्यामीति मेऽखण्डप्रतिज्ञा वर्तते।

क्रमशः............।

**आचार्य अरविंद पांडेय**

# वित्तव्यापारार्थजगतः वार्ताः संक्षेपेण

## मुम्बई महानगरात प्रसादानंद वासुदेव उकिडवे महाभागः

1. दशवर्षाणि यावत् इन्फोसिस समवायस्य प्रथमत्रैमासिकस्य सम्कुलित प्राप्तिं प्रमाणं नवोच्चांकं अलङ्कृत्य फलितलाभांशः त्रयोविंशति प्रतिशतमेन प्रवर्ध्य द्विपञ्चाशताब्जमितं अलेभे।
2. जनानां वैयक्तिकं चयनितं भागग्राही समागमेन औद्धत्वेन पृष्ठपोषकताधिरीकृत्य झोमाटो समवायस्य विपणनार्थं प्रवेशान्विताव्हानं प्रथमेहनि प्रपूजयेत्।
3. रिलायन्स समूहस्य वक्रद्रुष्टिः पातेन जस्टडायल्सस्योपरि स्वाधिष्ठानं कर्तुर्महति। डिएस्के गृहनिर्माणाधीन सम्पत्त्यायाः सर्वाधिकारां स्थापनाय प्रतिस्पर्धायां मन्त्राः वा आसडानः अन्तिमं परीक्षणं कृतम् अग्रे विद्यते।
4. आदौ मौद्रिक चलनस्य विनिमयाय विपणीम् स्थिरता सन्निहितं अतिरिक्ताधिकमूल्यवृद्धिं अवरोधनाय भारतीय अर्थव्यवस्था राज्यपालः व्यवधानादथी बलीयान् मध्यस्थतान्तरागमनेन द्धाब्जमितधनं व्यापादितम्। भारतीय अर्थव्यवस्था राज्यपालः अस्माकं जनानां गुप्तसूचनानां सांख्यिकी ज्ञानं माहिति संपूरकं देशीयान्तर्गतं संग्रहणसम्बन्धिते प्रकरणापचीय संपूरक व्यवस्थाप्रोक्तं विधिस्तुत्याय अवमानं भासते सति मास्टर परिपत्राय एतस्य नवसदस्यता स्वीकरणाय प्रतिबन्धात्मकः आदेशः प्रदत्तः।
5. भारत देशेन सह चीनदेशः उभावपि सीमातिवर्तिन् समस्या निवारणाय सद्यस्थितं भूदलस्य सैन्याधिकारिणां मेलनाय सहमतिं प्रदत्तवन्तौ।
6. लंडनस्थितं सप्तचत्वारिंशतखर्वमितं पलायितानां लुण्ठनात् निर्मितं सम्पत्त्यायां अप्रत्यक्षतया विक्रय प्रकरणे प्रवर्तनं निदेशालयेन स्टान्चार्टधनकोशागाराय प्रताडितीम्।
7. गतमासे समस्तमहाविक्रयात्मकं वृद्धिदरनिर्देशांकः उन्नते सप्तशतमलवाधिकद्वादशप्रतिशतमानेनोपरि जाजायते।
8. बिडेन सर्वकारेण अमेरिकादेशस्य संसदपटले त्र्सार्धत्रयमहपद्ममितार्थ सहायतां कर्तुं वित्तीय संकल्प पत्रं स्थापितम्।
9. नवी मुंबई स्थिते सांकेतिक संहिता माहिती ज्ञानसंग्रहणाय मध्यवर्ती प्रधानं संसाधन केन्द्र निर्माणाय ब्रुकफिल्ड डिजीटलेन सह द्धाब्जमितधनं निवेशाय प्रयासरतः आस्ताम्।

dr vyas: मुम्बई महानगरात प्रसादानंद वासुदेव उकिडवे महाभागः

# 'नैषा तर्केण स्वबुद्ध्भ्यूहमात्रेण न प्रापणीया इति अर्थः'

सर्वेदेशेषु सर्वकालेषु च कोऽहमिति प्रश्ने सति मनुष्यः सर्वेक्षेत्रेषु आत्मनः तत्त्वमन्विष्यति। तस्य तत्त्वज्ञानस्य आकरः क इति परिशिलयितुं श्रुतिम् एव आश्रियते। यद्यपि स्वस्य ऊहेन आत्मनः तत्त्वज्ञानं सम्भाव्यते, प्रतिज्ञायते च बौद्धादिभिः तथापि ऊहस्य अनुमानार्थापत्यादिरूपस्य तदनुकूलयुक्तिरूपस्य वा अस्थिरत्वात् न तेन आत्मनः तत्त्वज्ञानं प्रेक्षावद्भि अङ्गीकर्तुं शक्यते। उक्तं च श्रुतावेव 'नैषा तर्केण मति आपनेया'1 इति। विवृतञ्च भाष्ये 'नैषा तर्केण स्वबुद्ध्भ्यूहमात्रेण न प्रापणीया इति अर्थः'2 इति। उक्तमेव भगवता सूत्रकारेण इति। अतः आत्मनः श्रुत्यनुसारी निर्णय एव श्रेयाः। सा च श्रुतिः 'सत्यं ज्ञानमनन्तं ब्रह्म' इति आरभ्य 'तस्मात् वा एतस्मादात्मन' इति ब्रह्म एव आत्मशब्देन व्यपदिशति। तेन च आत्मनः स्वरूपं/तत्त्वं ब्रह्मैव इति विज्ञायते। इदमेव श्रुत्यन्तरेषु स्पष्टम् अवबोधकैः वाक्यैः प्रतिपाद्यते 'तत्त्वमसि''अहं ब्रह्मास्मि'5 इत्यादयः। माण्डूक्योपनिषदि तु अस्य तत्त्वं स्पष्टीकर्तुं एकः सुलभ उपायः गृहीतः।तच्च ऐक्यं कथं सम्भवति इति प्रश्नं मनसि निधाय आत्मनः चत्वारः पादाः रूप्यकादिवत् /कार्षापणवत् सन्ति इति प्रकल्प्य लोकप्रसिद्धाः जाग्रत्-स्वप्न-सुषुप्त्याख्याः तिस्रः अवस्थाः एव ते पादाः इति निरूप्य, एतादृशिभि अवस्थाभिः रहितः शुद्ध एव आत्मा - तदेव आत्मनः शुद्धं स्वरूपम्- तदेव जीवब्रह्मणो ऐक्यम् इति निपुणं निरूपितम्। अनेन निरूपणेन इदं प्रतिपादितं भवति यत् आत्मा अवस्थावत्वेनैव प्रसिद्धः यद्यपि तथापि न अवस्थावत्वम् आत्मनः स्वरूपम्। अवस्थानाम् अन्योन्यव्यभिचारित्वेन अव्यभिचार्यात्मस्वरूपता न सम्भवति।

# ''यद्वा विश्वश्चासो नरश्चेति विश्वानरो विश्वानर एष वैश्वानरः, सर्वपिण्डात्मानन्यनन्यत्वात् स प्रथमः पादः''

शङ्करभाष्ये 'वैश्वानर' इति पदस्य अर्थ एवं प्रदर्शितं ''यद्वा विश्वश्चासो नरश्चेति विश्वानरो विश्वानर एष वैश्वानरः, सर्वपिण्डात्मानन्यनन्यत्वात् स प्रथमः पादः'' इति। अत्र च भगवत्पादाः विश्वेषां नराणाम् अनेकधा नयनात् वैश्वानरः। यद्वा विश्वानरः। सर्वपिण्डात्मानन्यत्वात्। स एव प्रथमः पाद इति उभयम् अपि व्युत्पत्तिं दर्शयाञ्चक्रु एतेन अध्यात्मं व्यष्टिरूपं समष्टिरूपाभिन्नं प्रतिपादितम् इति तदीयम् आशयः सुष्ठु प्रतिपादितः भवति। विवृतः च अस्माभिरपि पूर्वमेवायमाशयः आचार्याणां प्रतिपत्तिसौकर्यप्रयोजनक इति सर्वं शिवम्। एतावता आत्मनः प्रथमपादः अर्थात् जाग्रदावस्थाविषये वर्णयते। जाग्रदवस्थायां जीवस्य विषयानुभवः प्रथमपादे वर्णितः। 'जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थुलभुक् वैश्वानरः प्रथमः पादः।'18 बहिष्प्रज्ञो नाम स्वात्मव्यतिरिक्ते विषये प्रज्ञा यस्य सः। बहिर्विषया प्रज्ञा अपि अविद्याकृता एव अवभासते इति श्री भगवत्पादानां शङ्कराचार्याणां व्याख्या दर्शिता एव । सप्ताङ्गशब्देन विराट् ब्रह्मा सूचितः। बहिःप्रज्ञ इति शब्दस्य अर्थः बहिश्शब्दो बाह्यार्थपरः। सप्ताङ्गः इति अर्थः चत्वारो हस्ताः द्वौ पादौ हस्तिकरश्चेति इत्येव रीत्या सप्ताङ्गानि। तस्य एकोनविंशतिः मुखानि ज्ञानोपलब्धि/विषयोपलब्धिद्वाराणि। तानि यथा ज्ञानेन्द्रियपञ्चकं (श्रोत्रम्,त्वक्,चक्षुः,जिह्वा,घ्राणम्)। कर्मेन्द्रियपञ्चकम् (पायुः, उपस्थः, पादः, पाणिः, वाक्)। वायुपञ्चकम् (प्राणः, अपानः, व्यानः, उदानः, समानः) एवं मनोबुद्धिः, अहङ्कारः चित्तमिति एवं प्रकारेण एकोनविंशतिमुखः। एतैः द्वारैः वैश्वानरः स्थूलान् विषयान् भुङ्क्ते इति स्थूलभुक्। वैश्वानरशब्दस्य निष्पतिः यथा - 'विश्वेषां नराणाम् अनेकधा सुखादिनयनात् विश्वानरः' यद्वा विश्वश्च असौ नरश्च इति विश्वानरः, विश्वानर एव वैश्वानरः। एवं प्रकारेण आत्मनः जागरितस्थानः वैश्वानरः नाम्ना अभिधीयते।

**स्वप्न अवस्थाः** 'इन्द्रियाजन्यविषयगोचरापरोक्षान्तःकरणवृत्त्यवस्था स्वप्नावस्था' - अस्याम् अवस्थायामिन्द्रिय व्यापाराभावेऽपि अन्तःकरणवृत्त्या रथगजादयः विषयाः विज्ञायन्ते। स्वप्ने प्रतीयमानः रथगजादिप्रपञ्च अस्तीत्येव प्रतीयते। परन्तु परीक्षायां कृतायां बाधः ज्ञायते। अतः तस्य भ्रम एव। तत्र सद्रूपेण प्रकाशमानं स्वयं प्रकाशं चैतन्यमेव स्वप्नप्रपञ्चस्याधिष्ठानम्। तदेव सत्यम्। न इयम् स्वप्नावस्था सत्या आत्मस्वरूपा वा। सुषुप्तायवस्थायाम् व्यभिचारात् । निद्रायां करणेषु उपरतेषु सत्सु जागरितसंस्कारेण जायमानं निद्रादिदोषप्रयोज्यं ज्ञानं भवति। इयमवस्था स्वप्नावस्था इति उच्यते। अस्याम् अवस्थायाम् असौ जीवात्मा व्यष्टिसूक्ष्मशरीरे नाडीमध्यगतः सन् मनः अधिष्ठाय तैजसत्वं प्राप्नोति, वासनारूपकं जगद्वैचित्र्यं स्वभासा भासयन् यथेप्सितं स्वयं भुङ्क्ते। असौ सूत्रात्मा जीवः प्रातिभासिकत्वेन स्वप्नकल्पितः 'तैजसः' इत्यभिधीयते। अस्य प्रतिपादकं माण्डूक्योपनिषदः वचनम् इत्थम् अस्ति। स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः। प्रबिविक्तभुक् तैजसः द्वितीयः पादः । स्वप्नस्थानः यत्र स्थित्वा जीवः स्वप्नपदार्थान् पश्यति स स्वप्नः। तदेव स्थानं यस्य स स्वप्नस्थानः, कण्ठदेशस्थ इत्यर्थः। अन्तःप्रज्ञः अन्तश्शब्दोऽत्र बाह्यार्थज्ञानजन्यवासनापरिणामरूपार्थपरः। तान् अन्तस्थितान् वासनामयार्थान् प्रज्ञापयति जानाति च चेत्यन्तः प्रज्ञः। प्रज्ञ इति जानातेः क्तः। सप्ताङ्ग एकोविंशतिमुख इति प्राग्वत्। प्रविविक्तभुक्। वासनामयतया बाह्यार्थेभ्यो विविक्तान् स्वप्नार्थान् भुङ्क्ते भोजयति चेति प्रविविक्तभुक्। तेजोमयचित्रस्थतया चित्तसम्बन्धित्वेन तैजसनामा आत्मनो द्वितीयः पादः द्वितीयं रूपमित्यर्थः। इदं च व्यष्टिरूपं श्रुत्या प्रतिपादितं समष्टिरूपं तु सर्वसूक्ष्मशरीरोपाधिकं सूत्रसंत्रितं प्राणाख्यं हिरण्यगर्भम् इति तत्त्वम् इति मन्तव्यम्। इदानीं वाक्यघटकानाम् एकैकपदानां सारस्य विशेषार्थः च पर्यालोचयामः। ''स्वप्नः स्थानमस्य तैजसस्येति स्वप्नस्थानः। जाग्रत्प्रज्ञाऽनेकसाधना बहिर्विषयेणावभासमाना मनःस्पन्दनमात्रा सती तथाभूतं संस्कारं मनस्याधत्ते। तन्मनस्तथा संस्कृतं चित्रितम् इव पटो बाह्यसाधनानपेक्षमविद्याकामकर्मभिः प्रेयमाणं जाग्रद्वदवभासते इति स्वप्नस्थानम्'' इति भगवत्पादानां भाष्यम्। तदेतत् अनेन च इन्द्रियाणाम् उपरि मनः अनुपरतं यदि। सेवते विषयान् एव तत् विद्यात् स्वप्नदर्शनम् इति स्वप्नलक्षणं स्फोर्यते। विवृतं च एतत् तक्षाधिकरणे भाष्ये। तदनेन सर्वविधव्याख्यानेन जाग्रद्शासनावासितान्तःकरण उपरतेन्द्रियः जीवः स्वाप्नान् पदार्थान् स्वकल्पितान् पश्यन् अनुभवन् वा स्थितः समष्टिव्यष्टिरूपः अन्तःप्रज्ञशब्देन प्रोच्यते इति लभ्यते। सप्ताङ्गः तथा एकोनविंशतिमुखः पूर्वेऽस्मिन् प्रथमे अध्याये जाग्रदवस्थाविचारः कृतः। तत्रैव सप्ताङ्गः तथा एकोनविंशतिमुखः इति विषयौ आलोचितौ। पुनः अस्मिन् स्वप्नप्रस्थाने सप्ताङ्गः तथा एकोनविंशतिमुख इति विषयौ पूर्ववत् आलोचना कार्या किन्तु तत्र स्थूलशरीरविषये सप्ताङ्गत्वं तथा एकोविंशतिमुखम् आलोचितम्, किन्तु अत्र सूक्ष्मशरीरविषये तद्वदेव निरूपणम् इति भेदः। विश्वस्य सविषयत्वेन प्रज्ञायाः स्थूलायाः भोज्यत्वम्। इह पुनः केवल वासनामात्रा प्रज्ञा भोज्येति प्रविविक्तो भाग इति भाष्यकाराः व्याख्यां चक्रुः। अनेन च स्थूलाः विषयाः स्वप्ने न सम्भवन्ति तेषां वाधात् अपितु तद्भिन्नाः केवलं वासनामया एव इति स्पष्टम्। ''विषयशून्यायां प्रज्ञायां केवलप्रकाशस्वरूपायां विषयित्वेन भवतीति तैजसः''इति शङ्करभाष्ये उक्तम्। ''स्थूलो विषयो यस्यां वासनामय्यां प्रज्ञायां न ज्ञायते तस्यां विषय संस्पर्शमन्तरेण प्रकाशमात्रतया स्थितायामाश्रयत्वेन भवतीति स्वप्नद्रष्टा तैजसो विवक्षित इति तैजस शब्दः'' इति आनन्दगिरिटीकायां व्याख्यातम्। तदनेन स्वप्नावस्थायाम् आत्मनः प्रसिद्धं स्वप्रकाशत्वं प्रदर्शितं भवति। ''अत्र अयं पुरुषः स्वयं ज्योतिः'' इति प्रसिद्धेः। अस्याम् एव हि आत्मनः स्वप्रकाशत्वं निदर्शयितुं शक्यम् इति प्रदर्शितं भवति। अवस्थात्रय प्रदर्शनेन आत्मनः स्थानत्रयसंचारित्वं निगमयति श्रुतिः। एतत् माण्डूक्योपनिषदि तथा बृहदारण्योपनिषदि अपि स्पष्टीकृतम्। विशुद्ध निर्गुण ब्रह्मस्वरूपं तुरीयमिति माण्डूक्ये। विश्वतैजस प्राज्ञावस्थासु क्रमेण वैश्वानरस्य हिरण्यगर्भस्य, ईश्वरस्य अन्तर्भावः प्रतिपादितः तेषां एकत्वभावनार्थम्।

**प्रेरणाश्रोत**

**जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्वतानन्द सरस्वती जी महाराज।**

**संरक्षक मण्डल**

**योग गुरू स्वामी आनन्द गिरि जी**
(बांध स्थित बड़े हनुमान जी )

**डॉ भगवत् शरण शुक्ल**
**प्रोफेसर**-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय
काशी हिन्दू विश्वविद्यालय वाराणसी

**प्रमोद बंसल**
निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**

**श्रीमती अनामिका चौधरी**
(सदस्य राज्य महिला आयोग)
**डा. पुष्पा पाल** (एमजीएम हास्पिटल)
**- सुनील सराफ**
(अवतार केमिस्ट)
**-पं. देवेन्द्र प्रसाद त्रिपाठी**
-एसो. **प्रो. डॉ. मुरली मनोहर द्विवेदी**
**-डॉ. शम्भुनाथ त्रिपाठी** (अंशुल)
**-डा. मोरार जी त्रिपाठी**
**-आचार्य कुशलदेव**
( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
**-महेश जी कपूर**
**डा.** कृष्णानन्द पाण्डेय
**फादर** - थॉमस कुमार
**उपसम्पादक** - विनम्र शुक्ल
**विशेषवार्ताहरः**
डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**

**RNI No. : UPSAN/2018/76680**

स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

**संपादक-राकेश शर्मा**